पूर्वस्मिन् ब्राह्मणे शतरुद्रीयहोमोऽभिहितः अथाग्निशमनो परिषेकधेनुकरणाग्निकर्षणादिकं कर्माभिधास्यते । कात्यायनः, — "चितिं परिषिञ्चत्यग्नीदृक्षिणे निकक्षेऽद्रिं कृत्वाश्मन्नूर्ज-मित्यद्भिरधि" *-इति आग्नीध्रो दक्षिणकक्षप्रदेशे पाषाणं निधाय "अश्मन्नूर्ज" † मिति मन्त्रेण पाषाणस्योपरि आरभ्याग्निं परिषिञ्चेदिति सूत्रार्थः तमेवं परिषेकं विधत्ते— "अथेति । यतः कारणात् सञ्चितोऽग्निः रुद्ररूपत्वादशान्तः अत एनं शमयत्येव परिषिञ्चेत् ननु अत्र सञ्चितस्याग्नेः रुद्ररूपत्वेना-शान्तस्य शमनार्थमेव शतरुद्रीयहोमः । अतएवोक्तं "तस्मा एत दन्नं समभरञ्छान्तदेवत्यम्" ‡ इति अतः किमर्थं पुनः शम-नार्थं परिषेकस्य विधानं ? न हि शान्तः पुनरपि शान्ति मपे-क्षते । न हि भुक्तवान् भोजन मपेक्षत इत्यत आह— "एतद्वा इति । एतदिति देवानां कर्मानुष्ठानावसरपरामर्शः । एतस्मिन्न-वसरे ते देवा अशान्त मेन मग्निं शतरुद्रियेण शमयित्वापि तेन परिषेकेण भूय एवाधिक मेवाशमयन् अतो यथै व देवा अकुर्वन् तथैवाय मपि यजमानः शतरुद्रियेण शान्त मपि पुनरधिकशमनार्थं परिषिञ्चति । अतः शमनाधिक्यार्थ-त्वात् परिषेकोऽवश्यं विधेय इति भावः । "अथैन मतः परि-षिञ्चति"—इति सामान्य विधानात्प्रथम आदितोऽपि परिषेकः

---

* का॰ श्रौ॰ सू॰ १८. २. १ ।

† वा॰ सं॰ १७ १ ।

‡ द्रष्टव्य पुरस्तात् १ ब्रा॰, २ क॰, ए॰ २



स्यादित्येत आह,— "अग्निरिति"। परिषेकस्य शमनार्थत्वादयस्याग्न्यादित्यसन्तापशमनक्षमत्वेन शान्तित्वादद्भिः सम्पादितेन परिषेकेणैनं शमयति ॥ १ ॥

"अद्भि" रपि कश्चिदेवपरिषेकेसाकल्येन शमनं न सेत्स्यतीत्याह,— "सर्वत" इति। सकृत् कृते शास्त्रार्थ इति न्यायेन सकृदपि परिषेके कृते परिषेकविधिश्च इत्यर्थः। स्यादित्यभिप्रेत्य तदावृत्ति सङ्ख्यां दर्शयति। 'त्रिः खलु' इति। त्रित्वसङ्ख्यस्य कार्त्स्न्येन शमनहेतु इत्याह,— "त्रिवृदग्नि" रिति अथ तमेव परिषेकं प्रकारान्तरेण प्रशंसति ॥ २ ॥

"यद्वेवैन मिति। एष सञ्चितोऽग्निः प्राजापत्यात्मकत्वेन प्रजापतेश्च सर्वलोकहेतुत्वेन तदात्मकत्वात् 'इमे' पृथिव्यादयो-लोकाः खलु अतश्च तादृशस्याग्नेः परिषेकेण इमानेव 'लोकानद्भिः परितनोति' परिवेष्टयति। समुद्रस्याबात्मकत्वादद्भिः परिषेके समुद्रेणैवैनान् लोकान् परिवेष्टयति। स च परिषेकः 'सर्वतः' सम्पादित इति समुद्रोऽपीमान् लोकान् सर्वतः (पर्येति पृथिव्याः समुद्रेण वलयत्वात् अन्तरिक्षद्युलोकयोः पृथिव्यामुपरिवर्त्तमानत्वात् पृथिव्यादीन् सर्वान् लोकान् सर्वः समुद्रः पर्येतीत्युच्यते सर्वत) * परिषेकः सव्यावृदपि कर्त्तुं शक्यत इत्यत आह— 'दक्षिणावृदिति। अतः प्रादक्षिण्येनैव परिषेकः सम्पादितः अतः समुद्रोऽपि तथैव पर्येति ॥ ३ ॥

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो न पुस्तकमात्रे अधिकः।

समाख्याविनियोगाद्याध्वर्यौः परिषेकं प्राप्तापवादमाह —
"अग्नीदिति । अथ कस्मादध्वर्युँपरित्यागेनाग्नीध्रः परिग्रह्यत
इत्यत्राह * अग्निरेव इति परिषेकस्याग्नेरगमनेन चय-
त्वादध्वर्यो परिषेक्तरितो † हिंसा सम्भविता स्यात् अग्नीध्रस्य
पुनरग्न्यसक्तत्वेन आत्मनैवात्मनो हिंसाया असम्भवाद्धिस यैं
तस्य परिग्रह इत्यर्थः । परिषेकावसरे दक्षिणे निकासे कश्चित्
पाषाणं निधाय ततः आरभ्यत इत्याह । "अश्मनोधीत्यादिना ।
निकषः कक्ष प्रदेशः तत् सन्निस्थानं । लोकेऽपि पर्वतादिषु
दक्षिणात्पाषाणसन्निस्थानाद् सर्वत स्रोतस्स्थाने (?) पाषाणं
निधाय तत आरभ्य परिषिञ्चेत् इत्यर्थः ॥ ४ ॥

इत्थं प्रकारं परिषेकं विधाय अथ तत्र मन्त्रं प्रदर्शन्
व्याचष्टे— "अश्मन्नूर्जं मिति ‡ । अत्र इति यत् 'एषां पर्वतेष्व
श्मनि 'शिता अर्करत्न पर्वतेषु पाषाणसन्निभ्यो या सुस्या
भवत्यश्मन्नूर्जं मित्येषभागो य एवाभिधत्ते । 'गिन्नियाणा
मिति श्रयति ग्रामवि इयङ्दैयै च रूपम् । उत्तरत्र 'इरःणा'
इत्येतदपि निजस्य पदम् । 'अद्भ्य ओषधीभ्य इत्यतन् मन्त्र
भागपरिपाटीयैः प्रसिद्ध इत्याह ,— "एतस्माद्वेति । 'पयः' क्षीरं
तच्च अनादिभ्यः सम्पाद्यन्ते इत्येतत् प्रसिद्ध मेव अयत्नुद्य-
वतीभ्यो गोभ्यः समुत्पत्तेरिति । 'तां न इषं' इत्यनेन भागो न

---

* 'इत्यत आह'—इति ज, भ । इत्यत्राह'—इति ह, ण ।

† 'अयमध्वर्यौ (?) परिषिक्तरि तो (?)'—observed by Dr. Webber.

‡ वा॰ सं॰ १७. १ ।

स्यादित्याशङ्क्याह,— "अग्निरिति । परिषेकस्य शमनार्थत्वादयमाग्न्यादित्यसन्तापशमनक्षमत्वेन शान्तिरूपाद्भिः सम्पादितेन परिषेकेणैनं शमयति ॥ १ ॥

"अद्भि' रपि कश्चिदेवपरिषेकसाकल्येन शमनं न सेत्स्यतीत्याह,— "सर्वत" इति । सकृत् कृते शास्त्रार्थ इति न्यायेन सकृदपि परिषेके कृते परिषेकविधिः इत्यर्थः । स्यादित्यभिप्रेत्य तदावृत्तिसङ्ख्यां दर्शयति । 'त्रिः खलु' इति । त्रित्वसङ्ख्यया कार्त्स्न्येन शमनहेतु इत्याह,— "त्रिवृदग्नि" रिति अथ तमेव परिषेकं प्रकारान्तरेण प्रशंसति ॥ २ ॥

"यद्देवैन मिति । एष सञ्चितोऽग्निः प्राजापत्यात्मकत्वेन प्रजापतेरिव सर्वलोकहेतुत्वेन तदात्मकत्वात् 'इमे' पृथिव्यादयो लोकाः खलु अतश्च तादृशस्याग्नेः परिषेकेण इमानेव 'लोकानद्भिः परितनोति' परिवेष्टयति । समुद्रस्याबात्मकत्वादद्भिः परिषेके समुद्रेणैवैनान् लोकान् परिवेष्टयति । स च परिषेकः 'सर्वत' सम्पादित इति समुद्रोऽपीमान् लोकान् सर्वतः (पर्येति पृथिव्याः समुद्रेण वलयत्वात् अन्तरिक्षद्युलोकयोः पृथिव्यामुपरिवर्त्तमानत्वात् पृथिव्यादीन् सर्वान् लोकान् सर्वः समुद्रः पर्येतीत्युच्यते सर्वत )* परिषेकः सव्यावृदपि कर्त्तुं शक्यत इत्यत आह — "दक्षिणावृदिति । अतः प्रादक्षिण्यक्रमेण परिषेकः सम्पादितः अतः समुद्रोऽपि तथैव पर्येति ॥ ३ ॥

---

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो ज-पुस्तकमात्रे अधिकः ।

समाख्याविनियोगाभ्यामध्वर्योः परिवेक्ता प्राप्तापवाद माह,— "अग्नीदिति । अथ कस्मादध्वर्युपरित्यागेनाग्नीध्रः परिग्रह्यत इत्याह * अग्निरेष इति परिवेक्तव्यस्याग्नेरग्नमनेन चयनादध्वर्यो परिवेक्तरितो † हिंसा सम्भवितास्यात् अग्नीध्रस्य पुनरन्यत्मकत्वेन आत्मनेवात्मनो हिंसाया असम्भवाद्धिंसार्थं तस्य परिग्रह इत्यर्थः । परिवेक्तावसरे दक्षिणे निकन्ने कश्चित् पाषाणं निधाय तत आरभ्यत इत्याह । "अश्मनोधीत्यादिना । निकक्षः कक्ष प्रदेशः तत् सन्धिस्थानं । लोकेऽपि पर्वतादिषु दक्षिणात्पाषाणसन्धिस्थानाद् सर्वत स्तेरुत्स्थानि (?) पाषाणं निधाय तत आरभ्य परिषिञ्चेत् इत्यर्थः ॥ ४ ॥

इत्थं प्रकारं परिषेकं विधाय अथ तत्र मन्त्रं प्रदर्शन् व्याचष्टे— "अश्मन्नूर्ज मिति ‡ । आप इति यत् 'एषा' पर्वतेषु अश्मनि 'श्रिता' अर्करतः पर्वतेषु पाषाणसन्धिभ्यो या मुत्यः स्रवतयाऽश्मन्नूर्जं मित्येषभागो य एवाभिधत्ते । 'शिश्रियाणा मिति श्रयतेः शानचि इयङादेशे च रूपम् । उत्तरञ्च 'रराणा' इत्येतदपि निजन्तं पदम् । "अद्भ्य ओषधीभ्य इत्यतत् मन्त्र भागपरिपाद्योर्थः प्रसिद्ध इत्याह,— "एतस्माल्लोकेति । 'पयः' क्षीरं तच्च घनादिभ्यः सम्पाद्यन्ते इत्येतत् प्रसिद्ध मेव अप्रात्युक्षवतीभ्यो गोभ्यः स्यादुत्पत्तेरिति । 'तां न इषं' इत्यनेन भागो न

* 'इत्यन आह'—इति ज, झ । इत्याह'—इति छ, ण ।

† 'चयनदध्वर्यो (?) परिषिक्तरि नो (!)'–observed by Dr. Webber.

‡ वा० सं० १७. १ ।

मरुतां तत् रुदाग्रत्वस्य प्रतिपादनात् तेषां तत् प्रेरकत्वेन तदुपपादयति। "मरुतो वा इति मन्त्रस्थाय मर्थ",—पर्वते अश्मनि गिरिषु श्रिता' श्रिता 'ऊर्जं रसं अपि इत्यर्थः। तां मूर्जं मरुतः आपवाभ्य। वनस्पतिभ्यश्च सम्यदितः यथा आहरन्ति तद्वत्वात्। हेतु मतः संगराता- रादाने, सम्यग्दाता युय ता मिष मिष माता। मूर्जं रम नोऽस्मभ्यं धत्त सम्प्रदत्त इति परिषेकानन्तरं अश्मन्त ऽइत्यनेन मन्त्रेण पाषाणे कुम्भं निदध्यात् इत्याह। "अश्मन्ने त्तुदिति, निदधातीति। अश्मनि कुम्भस्य निधाने परिषेकेण गन्तस्य रुद्रस्य क्षुधं पाषाणे निहितवान् भवति इत्याह। तस्मादश्मनि क्षुध दधाति।"तस्मादिति। यतोऽश्मनि क्षुन्निहिता तस्मा- साश्मो न भक्षणीय। तस्याश्मिषु धारत्वे नश्वरत्वात् भवन्ति नन्वश्मिन्ना क्षुधो निधानं पाषाणयति इत्यन्यस्मिन्नेपि कर्त्तव्य स्यात्। अतस्तदुद्दनेनाश्मन्येव किमिति निहितेति तमाह,—"अथो इति 'अश्मा कठिनत्वात् 'स्थिरः' इदपि। तथा चिरादिदानी मुपयान्तादि कालान्तरेऽनुवर्त्तनात्। अतोऽश्मनि क्षुधो निधानो स्थित एव स्थिर दधाति। अश्मन्यहितस्य कुम्भस्य पुन मंन्त्रेण स्वीकारं विधत्ते— "मयि त इति। तत् तेन स्वीकारेण पुनरामन्यूर्जं अस्माभिरुज्यते। पूर्वं क्षुधापगममात्रे अश्मनि कुम्भे निहित। तदामन्यूर्जोऽपि रप न सिध्यौवेदिति तदर्थं पुन "स्तथा द्वितीय तथा तृतीय इति। तृतीय वा एव स्थाने किं कर्त्तव्य मिति ॥ ५ ॥

तत्राह,—"निधायेति। उदकं क्रियतेऽनेनेति उदहरण कुम्भः

"उदकस्योदः सञ्ज्ञायाम्" * इत्युदादेशः । तन्निधाय त्रिवारं विपल्ययते प्रतिपर्येति । सव्याहृत्यर्थेति विपल्ययत इति "उपसर्गस्यायताविति लत्वं' † किमर्थं विपर्ययणमित्याह — "एतद्वा इति । एतस्मिन्नवसरे खलु एनमग्निं समन्तात्पर्येतीति । यत एतेनैनं लघुयति लघुमिवाचरति अतस्तया करोऽग्निं हिंस्यादिति । अहिंसायै तस्मा एवास्मये निह्नुते इत्युक्तं तद्विषय मपराध मपमार्ष्टीत्यर्थः । लघूयतीति उपमानादाचारे इति क्यच् प्रत्ययः ‡ । "तस्मा इति । "श्लाघह्नुङित्यादिना सम्प्रदान सञ्ज्ञायां चतुर्थी § इत्यर्थः प्रकारान्तरेणापि विपर्ययणं प्रशंसति ॥ ६ ॥

"यद्वेति । प्रदक्षिणप्रकारावसरे तेनाग्निं मनुगतो भवतीति विपर्ययणात् । अत एव जीवनायात्मानं पृथक् करोति । तथा सत्ये नेदानीं म्रियमाणेन शरीरेणैव 'सर्वमायुः' प्राप्नोति ॥ ७ ॥

विपर्ययणस्य त्रिवारं करणं प्रशंसति,—

त्रिर्विपल्ययत इति ॥ ८ ॥

त्रिवारं पर्येत्य पश्चात् धाम्यमानं कुम्भं नैर्ऋत्यां दिशि प्रक्षिपेदित्याह,—

"पयेति । "एतां दिशम्" नैर्ऋतीं दिशं हस्तेनाभिनीय दर्शयति । "एषा नैर्ऋती' दिगिति विवरणात् ॥ ९ ॥

---

* पा॰ सू॰ ६. ३. ५७ ।
† पा॰ सू॰ ८. २. १९ ।
‡ पा॰ सू॰ ३. १. १० ।
§ पा॰ सू॰ १. ४. ३४ ।

"एतद्वा इति। पूर्वं देवा एत मग्निं 'शतहद्रियेण चाद्रिय ग्रमयित्वाय स्वग्नेरेनोऽतप्रदेशे प्रदीपेण शोक रूपं पापं इत वन्त। अतो यजमानोऽपि तत्र प्रक्षेपेण तथैव कृतवान् भवति ॥ १० ॥

प्रक्षेप ं इरणसर अग्नेर्ब्राह्मभागीन इरेदित्याह,— "बाह्मे- न ग्न मिति। तथा इरणेन शोक: पृथिव्यादि लोकेभ्यो बहिर्हतो भवतीत्याह,— 'इमे वा इति। अग्ने: पृथिव्यादि लोकत्रय मकालं प्राजापत्यात्मकत्वात् तथैव वेदेरपि बहि हरण मभिधाय प्रशसति। "बहिर्वेदीति ॥ ११ ॥

उक्तप्रकारेण साश्मानं कुम्भकृत्वा 'वेदेर्दक्षिणस्या श्रोणौ' माश्मुखग्निष्ठन् य द्विष' इत्यनेन मन्त्रेण दक्षिणतो निरस्ये- दित्याह। "स वा इत्यादिना। उक्तं मन्त्रेण निरसने मन्त्रार्थ स्याथव फलतो वाह,— 'य मेदिति। अमुं ते शुच्छत्वित्यादि- कन्तु प्रागेव व्याख्यातम्। निरस्तस्य तस्याश्मनो भेदने कुर्या- दिति तदाह। यदीति। भेत्तवै भेत्तु गच्छत्वयेत्यादि सूत्रेण तु मये तवै प्रत्यय। निरसनेनाभिन्नस्य तस्य बालोद्भेदनेन कि लभ्यत इति तदाह। यदा भाति चाव 'यदि न भिद्येत भेत्तवै ब्रूयाद्' इति सामान्येन च तद्भेदन अश्मविषय उदकुम्भ- विषय इति निर्णयो दृश्यते। अतोऽत्र विचार्यते, कि मेतद् भेदनं कुम्भविषय मश्मविषय एवेति। कि तावत् प्राप्त सामर्थ्यात् कुम्भविषय मेतद्भेदनं नाश्मविषयं, कुत एतत् एव मेतद्भेद- यन समर्थं भवति। यदि न भिद्येत भेत वै ब्रूयादिति।

पर्याप्त समर्थं मेव न हि तस्य काठिनत्वात् भेदन मार्गच्छति इति पाप्सोऽभिधीयते *। अश्मविषय मेतद्भेदनं प्रतिपत्तव्यम् †। न कुम्भ विषयम्। कुत एतत् पर्यायाद्यात् यदा ह्येव स भिद्यतेऽथैताए ङ्गच्छति। यं द्विष्टीति ॥ १२ ॥

सा च शुगश्मनि निहिता तदश्मनि क्षुधं ‡ दधातीति। किञ्च आश्मनिवाश्मभेदनं कुम्भे भेदनए सामर्थ्यादश्मनिर्वार्थवादाद्याश्च। त्वाद्येति सेतुकरणं नाम वक्ष्यमाण मन्त्रजपपूर्वकं सेतुरूपेणानु-सन्धानम् प्रतरुद्रियादि कुम्भनिरसनान्तं कर्मकृत्वा प्रत्येत्य देवैर्धनुकरणाख्यलंसतोऽपि एतेन तथैव कृतवान् भवतीत्याह,— 'एतद्वा' इति ॥ १३ ॥

विहितं सेतुकरणं आसीनेन सम्पाद्य मिति केषाञ्चिच्छाखिनां सोपपत्तिकं मतं पूर्वपक्षयितुं दर्शयति। 'आसीन' इति स्वमत माह— "तिष्ठंस्त्वेविति । तिष्ठन्नेव कुर्वीत न पुनरासीन इत्येवकारेण पूर्व मुपन्यस्तस्य मतस्य निरासः। स्वमते उपपत्ति माह— "इमे वा इति। एवं सञ्चितोऽग्नि रिति पृथिव्यादयोलोकाः कुतः प्रजापति स्तावत् पृथिव्यादि-लोकहेतुत्वेन तदात्मक एषोऽग्निः प्राजापत्यात्मकः। स यः स प्रजापतिर्व्यस्रंसत मेष स योऽयं अग्निर्धीयत इत्युक्तत्वात्। इत्थं प्राजापत्यात्मना अग्नि रिमे लोकाः, लोकात्मैते तिष्ठ;

* का० श्रौ० सू० १८ २ ७।
† वा० सं० १७.१ म्र।
‡ 'शुचं'—इति का० श्रौ० सू० १८. २. ८।

सौत्र जर्धो चवतिष्ठन्त इव। अतश्च पृथिव्यादिलोकत्रयात्मकस्याग्नेरवयवीभूतानां सिष्टकानां धेनुकरणं स्थित्वा सम्पाद्यमित्यर्थः। अपि च लोके तिष्ठन् पुरुषो वीर्यवत्तरो भवति। तस्मादासीनः सतश्च वीर्यवानेव भूत्वा धेनु करोति। यथा धेनवोऽभिमतं पयो * दुहन्ति तद्वदेवैता अपिष्टकाः स्वाभिलाषितं दुहन्ति बुध्या धेनुरूपेणानुसन्धानं क्रियते धेनवश्च वीर्यवत्तरेण जनेन दुह्यमाना भूयः पयो दुहन्ति न पुनर्दुर्बलेन। अतोऽत्रापि स्वाभिलषितदोहनार्थं धेनुकरणं वीर्यवता सम्पाद्यमतश्च वीर्यवत्त्वं † तिष्ठतः सम्भवतीति तिष्ठन्नेव धेनुः कुर्यादिति भावः तिष्ठन्नपि कथं तिष्ठन् कुर्यादिति ॥ १४ ॥

तत्राह,— "उदङ् प्राङिति" ऐशानीदिगुच्यते। तदभिमुखस्तिष्ठन्नित्यर्थः ‡। लोके हि यजमानस्य पूर्वभागे धेनोः प्रत्यङ्मुखतयावस्थानो दोग्धुणाच प्रत्यङ्मुखा यास्तेन दक्षिणभाग उपसदनात् स्वाभिलषितदोहनार्थे इष्टकानां धेनुकरणे तथावस्थान मुचित मित्याह— "पुरस्ताद्वा इति ॥ १५ ॥

प्रकृते धेनुकरणे स्थानविशेषस्पर्शपूर्वकं मन्त्रं विधत्ते— "स यत्रेति। अग्नेरात्मभागस्योपरि यत्र स्प्रष्टु माप्नोति 'तत्' स्थान मभिमृश्य इमा मे अग्न इति मन्त्रं जपेदित्यर्थः। अतएव

* 'या'—इति भ।
† 'वीर्यवत्त्वे'—इति च।
‡ का० श्री० सू० १८ २ १०

कात्यायनः— "श्रात्मन उपरि प्रापयान्ते जयतीमाम इति *। अत्राक्रन इति अन्यात्मभागस्येत्यर्थः। अग्नादिव्यतिरिक्तासु बह्वीषु देवतासु सतीष्वपि मन्त्रे अग्नि मेव प्राधान्येन किमिति सम्बोधयतीत्यत आह,— "अग्निर्हैतासा" मिति। अवयवव्यापारे अवयविन सामर्थ्यात्तस्मादिष्टकाना मन्त्ववयवत्वेनाग्निस्तासां करणे असमर्थ इति भावः मन्त्रे आदावेकाच दशचेति। अवसाने अन्तश्चापरार्द्धश्चेति सङ्ख्याविशेष प्रयोगस्याभिप्राय माह— "एका च दशचेति। य एव परार्द्धो भूमा अपकृष्टं बहुत्वं अवरसङ्ख्यापर मसीमावगताद्यपेक्षया दशत्वसङ्ख्या अवरा सतोऽप्यवरा एकच सङ्ख्या ततश्चार्वाचीनायाः सङ्ख्याया अभावादिति। अतोऽन्तश्च परार्द्धश्चेति यत् एष परार्द्धो भूमा उत्कृष्टं बहुत्वं अधिकसङ्ख्याकाष्टादशशतसहस्रादिसङ्ख्यापेक्षया अन्तस्याधिकत्वं ततोऽपि परार्द्धस्याधिकत्वं तत उत्तरस्या अधिकसङ्ख्याया अभावादित्यर्थः। एवं च देवान् पून सङ्ख्या भूम्ना अधिक सङ्ख्या भूम्ना च मध्यतः शतादि सङ्ख्याकाः। एना: इष्टकाः परितो गवहोत्वा धेनुरक्षुर्वत। यत एव तस्मादिदानीं यजमानोऽपि एकाचेत्यादिमं मन्त्रपाठेन तद्देव परिगृह्य चेतुः कुरुत इति। तन्त्वेवं सति मन्त्रे यत् सङ्ख्याकानां मिश्रकानां धेनूरूपता सम्पाद्यते तत् सङ्ख्याका इष्टकासा धेनवः क्रियन्ते। तथाप्युक्तसङ्ख्यातिक्रमेण तत्सङ्ख्यानुसारात् यष्टोः कर्तृशाद्रियेतेत्यर्थः। कथं तर्हीष्टकास्तत्सङ्ख्याका धेनवः सम्पाद्यन्त

* का० श्रौ० सू० ८. २. ८।

इत्यत आह,— "अमुत्र वा इति। एष यजमानो ऽमुष्मिन् लोके उपलक्षण मेतत् इहलोकेऽपि* अनया इष्टका वीर्यवत्या † तेन यजुर्मन्त्रेणैता इष्टका अग्नेः एकादिपरार्धान्त-सङ्ख्याकाः कुरुते, मन्त्र सामर्थ्यादल्पस्य बहुवचनम् ‡ ॥ १६ ॥

तैत्तिरीयके श्रूयते §,—"धान्यमसि धिनुहि देवान्"–इत्यादि। एतस्य यजुषो वीर्येण यावदेका कामयते यावदेका तावदाहुतिः प्रथने न हि तदत्रिषावदेव स्यात् यावज्जुहोतीति मन्त्रे एका च दशचेत्यादिनोत्तरोत्तराधिकसङ्ख्यासन्तानस्य ,फल माह— "अथेति। अथ तदेवेष्टका धेनुकरणं वाग्धेनुकरणात्मना प्रशंसति— "यद्वेति। मन्त्ररूपया वाचितत्वात्। अग्नि-र्वागात्मकः एकत्वादिका अपि सङ्ख्याः वाचा प्रकाश्य-मानत्वात् वागात्मिकाः एव भवन्ति। अन्यथयवो भूताना-मिष्टकाना एकादश चेत्यादि सङ्ख्या प्रकाशनेन मन्त्रेण देवा वाचा मेव धेनु मकुर्वन्। अत इदानीन्तनोऽपि यजमानस्तद्-देव करोति। एकत्वादि सङ्ख्यानां वागात्मकत्वात् उत्तरो-त्तराधिकसङ्ख्यासन्तानेन वाच मेव भूयसी मविच्छिन्नां सम्पा-दितत्वाद्भवतीत्याह—, "अथेति। ननु च "इमा मे ‖ अग्न

* 'इहलोके,पि'—इति भ।
† 'वीर्यवतेत्यर्थः'—इति ज, भ, ष।
‡ 'बहुभवनम्'—इति ज भ, ष।
§ तै० सं० ४. ४. ११।
‖ वा० सं० १७ २।

इष्टका धेनवः सन्त्वित्यनेनैव * धेनुरूपत्वं सम्पादनात्। पुनरपि तदेवैता मे अग्न इत्यादिना सम्पाद्यत इति। पौनरुक्त्यं शङ्कां निवारयति। एतद्वा इति इमा मे अग्न इत्येतेनैवा इष्टका अस्मिल्लोके धेनू करोति। अथैता मे अग्न इत्यनेन अमुष्मिंल्लोके स्वर्गे धेनू करोति अतश्च पृथगर्थत्वान्न पुनरुक्तिरितिभावः। इष्टकानां लोकद्वयेऽपि धेनुरूपता सम्पादनस्य फलमाह— "अथो हैति। तथासति एता इष्टकारूपा धेनवः अस्मिन्नमुष्मिंल्लुभयोर्लोकयो रम्येनं यजमानं भुञ्जन्ति पालयन्तीत्यर्थः। भुञ्जन्तीति भुजो नवन इत्यात्मने पदं विधानो अवन निषेधात् परस्मैपदम्। हे अग्ने इमा इष्टका इहलोके एकत्वादि पदार्थाभ्र सङ्ख्याविशिष्टा धेनवः केवलं हि मिहलोक एव किन्तु हे अग्ने अमुत्रेत्येतत् पदं मन्त्र एव विहर्योति। अमुष्मिंल्लोक इति तत्रापि एता इष्टका मे धेनवः सन्त्विति मन्त्रस्यार्थः॥ १७॥

अथ तत्रैव मन्त्रान्तरम् प्रदर्शयन् व्याचष्टे— "ऋतव स्थेति †। ऋतवो हीति एता इष्टका ऋतव खलु संवत्सरा आत्मस्तान्ने अवयवत्वादित्यर्थः। अहोरात्राणि वा इष्टका इत्यत्राप्ययमेवाभिप्रायः। ऋतावृध इति छान्दसो दीर्घः; ऋतावृध इति पुनर्वचन मादरार्थः। स्पष्ट मन्यत्॥ १८॥

---

* 'सन्ति धाभैव'—इति क।

† वा० सं० १७ १।

"विराजो नामेत्यादिकस्याय मर्थः — एतस्मिन् काले खलु 'देवाः' यथा 'यथा एता इष्टका चावदते' येर्मा मभिरेना इष्टका चावदते जना ते रेव ना मभिरेना इष्टका चावदते जनाः ते रेव नामभिः स्वय मयाह्वयन्ताम् । ततयैता इष्टका एनान् देवान् 'अभ्युपावर्त्तम्' तत् समीप मगमत् । 'अग्र लोकम्पृणा एव' अविहितनाम्नः धेनुरूपतया अग्ग्यर्थ मूर्भ विसृजन्त्यः ; पराङ् मुखा एव तस्थुः अन्यासा मिष्टकानां स्वयमातृणा रेतः सिच्चिश्वज्योतिरपस्याप्राणभृदित्यादिकानि विद्यन्ते लोकम्पृणानान्तु तथा प्रातिस्विकनामधेयाभावादि-ष्टकावत् स्वनामानाह्वानेन विमुखा भूत्वा अवस्थिताः * इत्यर्थः । पश्चादेवास्सा इष्टका विराजनाम्नो रकुर्वत † । अतः स्वय मपि तत् समीप मगमत् । अतएव तस्मादुपधानावसरे-ऽपि लोकम्पृणा दशदशोपधाय मन्त्रेणाभिमन्त्रयते एवं च सति विराजो दशाक्षरत्वात् देवा विराजः कृतवान् भवतीति । तस्मात् मन्त्रे लोकम्पृणा उद्दिश्य विराजो नामेति प्रयुक्त मिति ॥ १८ ॥

विशद मन्यत् ऋतमयस्येत्यादि मन्त्रस्य योजनं यथा-श्रुत मेव इष्टकानां धेनुरूपता सम्पादनानन्तरम "मण्डूकेनाव-काया वेतसशाखाभिरग्निस्थमस्य विकर्षणं विधत्ते— "अयेति ।

---

* 'वनस्थिरः'—इति ज, 'वनस्थित'—इति भ ।

† 'रकुर्वत'—इति छ ।

एतया इत्यादिकस्य सम्बन्धस्तु प्रागेवाभिहितः। विहितं तद्विकर्षणं 'सर्वतः' कर्त्तव्य मित्याह ॥ २० ॥

सर्वत इति सर्वथापि विकर्षणस्य शमनार्थतां दर्शयति— "यद्वेवैन मिति। 'एनं' मग्निं मण्डूकादिभि 'र्विकर्षति' इति 'यत्'- यत्र एतत् कारणं खल्विति कारणाभिधानं प्रतिज्ञाय 'यत्रैत' मित्यादिना तत् प्रदर्श्यते,— 'अग्रे' पूर्वं यत्र यस्मिन् प्रस्तावे ऋषिशब्दाभिधेयाः 'प्राणा' एतं मग्निं समस्कुर्वन् संस्कार-प्रकारस्तु षष्ठकाण्डसाद्यावगन्तव्यः; तदाति * प्राणास्त मग्नि 'मद्भि' रेवोचितवतः ता यापः सस्कृता मण्डूका' अभवत् ॥ २१ ॥

ततः प्रजापतिः प्रतिनोऽस्माकं रसो वाश्चादित्यद्भिस्तो स प्रजापतिर्वै एतस्य 'रसस्य एष' वमस्पति वेत्तु इति अब्रवीत्। तस्येति कर्मार्थे षष्ठी एव इति प्रत्यक्षेण निर्दिष्टम्। 'तं' वनस्पति वेतस इति परोक्षेणाप्याह। यत एव मुक्तं तेन वेतसोऽभूत् खलु 'तं' देवाः परोऽक्षकामत्वा इतस इत्याचक्षते। अथापो यदब्रुवन् अवाङ्गादिति तस्मात् स रस 'अवाका अभवन्'। ताश्च देवताः परोक्षकामत्वा दवका इत्याचक्षते। "ता हैता इति। उक्त प्रकारेण 'मण्डूका:' साक्षादेवापः वेतसोऽपि तद्रसवेदानात् अवकास्तु इमाप्रकत्वादिति सर्वेऽप्येते मण्डूकादयः अवकात्मका इति। ता एता स्त्रिविधा आपः खलु तस्मात्ते रवकर्षणैरेता स्त्रिविधा-भिरप्यद्भिरेन मग्निं शमयितवान् भवति ॥ २२ ॥

---

* 'तदेते—इति ष।

इत्थं मण्डूकादीनां सर्वात्मकत्वेन शमयमार्थत्वं प्रद-र्श्यायमानैव क्रत्स्नात्मरूपेण प्रशंसति,— "यद्वेवेति। पूर्वं प्रजासृष्टिनिबन्धनेन विस्रंसनेन परासुः प्रजापति इदानीं चयनलक्षणेन संस्कारेण प्राणादीनां निधानात् पुन रुत्पद्यत इति चायमानाग्निलक्षणः प्रजापति र्जायत एव। जाय-मानस्य च सर्वान्नभोज्यार्थं मेवोत्पत्तेः; एषोऽपि सर्वस्मा अन्नाय जायते। मण्डूकादयश्च क्रत्स्नं मन्नम्। तदेव प्रदर्श्यते,— "पशवश्च होता इति। 'एता मण्डूकावकावेतस शाखाः' * क्रमेण पशव श्चादो वनस्पतयश्च भवन्तीति। मण्डूकादय स्थावरजङ्गमात्मकं क्रत्स्नं मन्नं भवत प्रदर्श्यते,। मण्डूकादयः सर्वे अपि च अन्नात्मकाः। तथापि अवकामात्रेलैका यत्र नत्वाद-प्राप्ति वनस्पतिरूपत्वाच्च ता आप इत्युक्तम्। एवञ्च सति मण्डू-कादिभिर्विकर्षणेन एनं मग्निं सर्वात्मत्वेन प्रीणातीति ॥ २१ ॥

विकर्षणेन वीतरसान् मण्डूकादयोऽनुपजीवनीयः श्चनुवि-त्याह,— "मण्डूकेनेति पशूनाम्। पशूनां मध्ये मण्डूकेन विकृष्ट-वानिति यत् यस्मात् पशूनां मध्ये मण्डूका गतदारत्वात् पश्वन्तरवदुपकारको न भवतीति। सो भ्यर्यु कथति एव मेवावका अपि मत्स्याः पेयावान् भवतीति वेतसोऽपि वनस्पत्यन्तर-यत् पुष्पफलादि नोपकारको न भवतीति। एते सर्वे अनुजीव-नीयाः अभूवन्नित्यर्थः ॥ २४ ॥

---

* का० श्रौ० सू० १८ २ १०। वा० सं० १७ ६।

मण्डूकादिभिः कथं सम्भवतीति तदुपायमाह— "तानीति सोऽध्वर्युः 'तानि' मण्डूकादीनि 'वंशे प्रबध्य' विकर्षणेनेति शेष । पूर्वं मग्निस्थलस्य सामान्येन विकर्षण मुक्तम् । अथैन विकर्षति । सर्वतो विकर्षतीति । तदेदानीं कस्मिन् कस्मिन् प्रदेशे केन केन प्रकारेणेति विशेष जिज्ञासाया माह ;— "दक्षिणार्धेनेति । परिश्रिता मन्तरेणाग्नेरात्मना भागस्य दक्षिणभागे प्रथमं 'प्राग्' अपवर्गं कर्षति । "समुद्रस्यत्वेवेति * मन्त्रेणेत्यर्थः । दक्षिणार्धेनेति व्यत्ययेन तृतीया । समुद्रस्य त्वावकयाग्ने परिव्ययामसीत्यस्य तात्पर्यमाह — "समुद्रियाभिस्त्वेति । समुद्रशब्देनात्र जलाशय उच्यते । समुद्र सम्बन्धिनीभिरद्भिः 'त्वा शमयाम' इत्येतदुक्तं भवति । अवकाया अबात्मकत्वात् तया सञ्चरणेन शमनञ्च निष्पादनादित्यर्थः । "समुद्रियाभिरिति समुद्राभ्राद्घ † इति प्रत्ययः । तस्य घायनेयी इत्यादि सूत्रेणापि यादेशः । हे 'अग्ने' 'त्वा' समुद्रसम्बन्धिन्या 'अवकया' यदि 'परिव्ययामसि' परितः शब्द गुणः इदन्तो मसि रित्युत्तमपुरुष बहुवचन सकारस्यान्ते इकारागम. । तेन सञ्चरणेन शान्त स्त्वं 'अस्मभ्यं' अस्मदर्थं पावयति शोधयतीति 'पावक' पावयिता 'शिव' शान्तः चानुकूल्यवान् भवेति मन्त्रस्यार्थः ॥ २५ ॥

* वा० सं० १७ ४ ।

† पा० सू० ४ ४ ११८ ।

उक्त प्रकारेण दक्षिणभागे विकृष्य पश्चिमभागे उदगप-वर्गं "हिमस्यत्वेत्यनेन मन्त्रेण * विकर्षेदित्याह,— "अथ जघनार्द्धेनेति। 'यद्वै शीतस्य' इत्यादिकस्यायमर्थः— 'यत्' खलु 'शीतस्यापि प्रशीतं' प्रकृष्टं शीतं 'तद्धिमस्य जरायु' जरायुशब्दो गर्भवेष्टनवचनः अतश्च जरायुर्यथा गर्भं माच्छा-दयति तद्वदधिकं शीतमभिभवेनाच्छादयतीति। हिमस्य जरायुणेति शीतादप्यधिकशीतत्व मुच्यते, इति। अत्र अप्सा-त्मका मण्डूकादय एव हिमस्य जरायुणेत्यनेन विवक्ष्यते। तेन च शब्देन तेषा मभिधानं प्रकटयितुमसमर्थत्वात् सूचनार्थ मिति प्रतिपत्तव्यम् ॥ २६ ॥

अथोत्तरभागे प्रागपवर्गं "उपज्मन्नुपेति † मन्त्रेण विकर्षे-देति विधत्ते— "अथोत्तरार्द्धेनेति मन्त्रस्तु स्पष्टार्थ इत्याह यथैवेति ॥ २७ ॥

अथ पूर्वभागे "अपा मिद मित्यादि ‡ मन्त्रेण दक्षिणापवर्गं विकर्षेत्याह अथ पूर्वार्द्धेनेति। अत्र मपि मन्त्रस्पष्टार्थ इत्याह— "यथैवेति है अत्रे यदेतन् मण्डूकावकावेतस: शाखालक्षणं अस्तु इदं अपान्ययनं नितरां स्थानं अपा मल्पीयस्त्वेन तदय-नत्वं असम्भवतीति। तत्राह समुद्रस्येति नह्यल्पीयसी मपामयन मेतत्। अपि तु 'समुद्रस्य' जलनिधिरेव 'निवेशनं' निवे-

* वा० सं० १७ ५।
† वा० सं० १७ ६।
‡ वा० सं० १७ ७।

यतेऽस्मिन्निति निवेशनं अधिकरणे ल्युट् स्थाने मित्यर्थः। यत्र च तथाविधेन मण्डूकादिना विक्रम्यते यतः अतस्त्वां प्रयोमि ते हेतयो ज्वालाः अस्मादन्यां 'हापन्तु अस्मभ्यं' तु त्वं पावकं 'शिवश्च' भवति सन्न्यार्थः। तत्राग्नि विकर्षणप्रकारं हस्ताभिनयेन दर्शयन दक्षिणभागादिक्रमेण विकर्षणात् सिद्धं प्रादक्षिण्यक्रमं प्रशंसति। इत्यग्रे विकर्षतीति,— "देवत्रेति। देव मनुष्येभ्यो * सूत्रेण देवार्थे त्रा प्रत्ययः। देवं देवं देवोचितं भवतीत्यर्थः॥ २८॥

आत्मभागविकर्षणस्य प्राथमिकत्व मुपपादयति,— "आत्मान मिति दक्षिणार्द्ध नेत्यादिना विहितं विकर्षण मग्नेरात्मभागे एव क्रियते। अतश्चाग्ने आत्मानं विकर्षतीत्येतदुपपन्नं कुतः सम्भवति। जायमानस्य करचरणाद्यवयवजातस्य मध्ये पूर्वमात्मभाग एव सम्भवति तत् सकाशात् करचरणादीना मुत्पत्तेरिति। अथ दक्षिणपश्चादीनां विकर्षणं विधाय तत्क्रमसिद्धं प्रादक्षिण्यं पूर्ववत् प्रशंसति॥ २९॥

अथेति पश्चादीनां विकर्षेण मात्मभाग मभिलक्ष्य कुर्यादित्याह। अध्यात्ममिति अन्त्यात्मना अभि अध्यात्मं लक्षणेनाभिप्रती आभि मुख्य इत्यव्ययी भावसमासः। अनयेति समासान्तष्टच् † विकर्षणानुसारेण 'आग्निं' निहितवान् भवतो-

---

* 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्'— पा० सू० ५। ४। ५६।

† पा० सू० ५। ४। १०८।

त्याह। अध्वान मित्येति कथ मध्यमां विकर्षणं भवतीति; तदाह परस्तादिति। अथ दक्षिणपदादीनां विकर्षणेषु मन्त्रान् विधत्ते,— अग्ने पावक रोचिषेत्यादिना मन्त्रेषु * पावक-शब्दप्रयोगस्याभिप्राय माह— 'पावकं' पावक मिति 'यत्' खलु वस्तु 'शिवं' तस्यैवार्थं प्रदर्शनं 'शान्त' मिव तत् 'पावकं' भवति। *अथाग्नस्य यदि सम्पादकत्वात् अतद्याग्नेः शान्तत्व सिद्धये तेन शब्देन सम्बोधन मिति* ॥ १० ॥

भावः विकर्षणे विनियुक्तानां मन्त्राणां सप्तत्वसङ्ख्यया प्रशंसति,— "सप्तभि रिति। 'सप्तचितिकोऽग्नि' रित्यनेन 'सप्तर्षयः सप्तस्वरः सप्तस्वरोऽस्मि' रित्यनेन च पृथग्वाक्यैः सप्तसङ्ख्यायाः प्रदर्श्यते। पञ्च चितयो नित्याः इतरे द्वे चिती नैमित्तिके इति सप्तचितयः अधिमासापेक्षया सप्तर्तवः। यस्मिन् वंशे मण्डूकादीनि यथा विलसन्तं वंश सुजाते 'मदचिवेदित्याह तं वंश मिति ॥ ११ ॥

अथैन मग्निं परितः सामभि र्गायेदित्याह—"अथेति। विहितं सामगानं मङ्गलरूपतया प्रशंसति। अत्रैव इति। कथ मेतत् साम्ना अमृतरूपत्व मिति, तत्राह— "सामानीति"। अङ्गानाके शरीरेव स्वामाधिकारादि पञ्चभेदविशिष्टत्वात् वा साम्ना प्राणत्वं प्राणधामत्वं खलु प्राणसम्बन्धे मरणाभावात्। अतश्च प्राण रूपेण साम्नामप्यधमजरूपत्वात् सामगानेन मृत मुत्तमं रूपं मग्निरयमौ निर्दधातीत्यर्थेनत्र सामगानं सर्वतः कर्त्तव्य

* मा० सं० १७ ८।

मित्याह। "सर्वत इति। अतः पुनस्तदेव साम्नामं प्रजापति सम्बन्धिन आत्मनः अनश्विकामतरूपत्वसाधनतया प्रशंसति ॥ १२ ॥

"यद्देवेन मिति। एतस्मिन् काले खलु 'देवा 'इमं प्रजापतिसम्बन्धिन 'आत्मानं शरीर 'अनश्विकमत' एव 'कुर्वीमहीति' अकामयन्त अस्थाविनश्वरत्वेन तद्विशिष्टस्यापि शरीरस्य विनश्वरत्वात् तद्रक्षितं प्राणशरीरं कर्मनश्यमित्यर्थः। तत एते येन प्रकारेण 'अस्माकम अनश्विकं करवामहे' एतत् प्रकार मुपजानीतेत्युक्ता पयात् कथं तत् प्राप्नोपाय इत्यपेक्षायां "चेतयध्व मित्यब्रुवन्। तद्वाक्यम् श्रुति स्वय मेव विवृणोति,—"चिति मित्यादिना। 'चितिं' विमर्शमिच्छतेति खलु 'ते अब्रुवन्' एव मपि किमर्थ मब्रुवन् मित्याशङ्क्याह "तदिच्छतेति। तदिति लिङ्गव्यत्ययः येन प्रकारेण 'अस्माकम अनश्विकं' कुर्वीमहि तत् प्रकार परिज्ञाय चिति मिच्छतेति मुक्तमित्यर्थः ॥ १३ ॥

पयाते तया विचारयमाणा स्तदुपायत्वेन एतानि वक्ष्यमाणानि गायत्रादीनि सामानि दृष्टाते देवं परि गीयत आत्मानं यथोद्दिष्ट मकुर्वन् अतस्तदेव यजमानोऽपि कुरुते सर्वत इति। पूर्वादिभागेषु सर्वतो गानेन शरीर सर्वतः कारत्वेन मनश्विक ममृतं करोति। विहितं गान मासोत्तेन निहता वाक्यार्थ मिति। तत्र स्वेच्छयान्यतर प्रकारेण तत् प्रसक्तो नियम माह— 'तिष्ठन्निति। तत्र शीघ्रत्वार्थं

त्रिवृतं छन्द मिति। तत्र हिङ्कारे खलु छन्दः साम भवति। सामान्यरूपेण हिङ्कारे छन्द मपि सामवर्त्तत इति अनेनैवाभिप्रायेण श्रुत्यन्तरेष्युक्तं हिंकरोति। साम्नैव करोति। अथैनं सामभिः परिगायतीति सामान्येन विधानात् देशविशेषे सामविशेषगान मभिधत्ते॥ २४॥

"गायत्र मित्यादिना। 'तत् सवितुर्वरेण्य' * मित्यस्याम् गायत्र्या मृच्युत्पन्नं साम गायत्रम्। तत् पूर्वभागे गायेत्। एवञ्च गायत्रा अग्निना सहोत्पन्ने तत्रोत्पन्नस्यापि साम्नो-ऽग्नित्वादस्य सञ्चिताखिललक्षणस्य प्रजापते रग्नि मेव शिरः प्रदेशत्वात् किञ्चास्य शिर एवैतेन सामगानेन 'अमस्थिक ममृतं' करोति॥ २५॥

'अभित्वा शूरनोनुम' † इत्येतस्या मृच्युत्पन्नं साम रथन्तरं तद्दक्षिणपक्षे गायेत्। एवञ्चास्य पृथिवी मेव दक्षिणं पक्षं कृतवान् भवतीति आह— "रथन्तर मित्यादिना अस्याः

* गायत्रसाम ;—

तत्सवितुर्वरेण्यम् भर्गोदेवस्य धीमहि।

धियो यो नः प्रचोदयात्॥

—इति उ० ६प्र० ३अ० १० ख० १ ऋचि।

† रथन्तरम् ;—

अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः।

ईशान मस्य जगतः स्वर्दृश मीशान मिन्द्र तस्थुषः॥

—इति छ० ३प्र० १अ० ४ द० १ ऋचि आ० ४प्र० १अ० ३१ साम।

यीति। "इमे इति। इन्द्राभिप्रायेण दर्शयति। यत इमे सर्वे रसा अस्यामधितिष्ठन्ते। अतोऽतिशयरसाश्रयत्वेन इयं रसवतः रसतम एव रसंतम. * तत्र परोक्षकामत्वाद्देवा रथन्तर मभिदध इत्यर्थः॥ २६॥

'त्वामिद्धि हवाम' † इत्येतस्यामृच्युत्पन्नं साम बृहत्, तदुत्तरे पदे गायेत्। तथावदिव मेवाभ्योत्तरं पदं भवतीत्याह — "बृहदुत्तरे पद इति। 'बर्हिष्ठा' अतिशयेन बृहती बृहच्छब्दादतिशयार्थे इष्टनिटिलोपे च रूपम्॥ २७॥

'कयानश्चित्र आभुवद्' ‡ इत्यस्यामृच्युत्पन्नं साम वामदेव्यम्। तदाग्नभागे गायेदित्याह। "वामदेव्यमिति। आग्न-

---

* 'रसतम: रसतम एव रसंतम:'—इति क।

† बृहत्साम;—

त्वा मिद्धि हवामहे साती वाजस्य कारवः।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववर्तः॥
—इति छ० ३प्र० १अ० ५द० २ऋचि, उ० १प्र० १अ० २७ साम

‡ महावामदेव्यसाम,—

कया नश्चित्र आ भुवदूती सदावृधः सखा।
कया शचिष्ठया वृता॥ १॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः।
दृढाचिदारुजे वसु॥ २॥
अभी षु णः सखीनामविता जरितॄणाम्।
शतम्भवास्यूतये॥ ३॥
—इति उ० १प्र० १अ० १२सू० १—३ ऋक्षु, उ० १प्र० १अ० ५ साम।

भागो वामदेव्यस्य प्राणेन वायु मेवात्मानं करोतीत्याह । "प्राणो वा इति । "सर्वेषां नु हैव देवानां प्राणा यद्वायुरिति । तदभावे तेषां व्यवहाराभावादित्यर्थः ॥ १८ ॥

अथ पुच्छं 'यज्ञायज्ञीयं' * साम गायेदित्याह .— यज्ञायज्ञिय मिति । 'यज्ञा यज्ञा वो अग्नये' इत्येतस्या मृच्युत्पन्नं साम यज्ञायज्ञीयम् । यज्ञायज्ञ शब्दोऽस्मिन्नस्तीति विग्रहे मतौ छः सूक्तसाम्नोरिति सामर्थ्ये छः । तस्य इयादेशः, अत यज्ञायज्ञीय मिति । आत्वं छान्दसम् । यज्ञायज्ञीय च चन्द्रात्मतां प्रतिजानीते । 'चन्द्रमा वै यज्ञायज्ञीय' मिति । तदेवोपपादयति "यो हि अयेति । 'यज्ञः सन्तिष्ठते' सम्पूर्णतामेति । तस्याहुतीनाए रसा" एनं चन्द्रमस मेतीति । अतएव देवा एत मुपजीवन्ति । अतो यज्ञाहुति रसस्य चन्द्रं प्रति प्राप्तिद्वारा यज्ञायज्ञः कारण एव यज्ञः एत मप्येति । तस्मात् 'यज्ञो यज्ञ' एत मेतीति , चन्द्रमा यज्ञायज्ञीय मित्यर्थः ॥ १९ ॥

अस्तु यज्ञायज्ञीयस्य चन्द्रात्मकत्वम् । ततः किं भजते समायात मित्यत आह— चन्द्रमस मेतीति "प्रजापतेर्हृदय मिति । 'कस्मिन् साम तदन्यत्र गायेदित्याह— "अयेति । तत् साम आदित्यात्मना स्तौति । "असौ वा इति । आदित्यस्य हृदय

---

* यज्ञायज्ञीय साम :—

यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे ।

प्र प्र वयममृतं जातवेदसं प्रियम्मित्रन्न शंसिषम् ॥

—इति छ० १प्र० १अ० ४द० १ अचि, गे० १प्र० ७अ० ३५ साम ।

सादृश्य प्रदर्शनेनोक्तं प्रजापतेर्हृदयसादृश्य प्रजापतेरोक्तं प्रजापतेर्हृदयत्वं उपपादयति । 'ज्ञस्य' लक्षण एत इति । गायत्र्यादीनां गानस्य स्थान विशेष उक्तः । अथैतद्गानं कस्मिन् स्थाने कर्त्तव्य मिति तत्राह,— 'घात्मन्' इति घात्मभागेति । यत्र क्वचित्क्रियतेति तत्राह — "निकक्ष इति । निकक्षावप्युभौ विद्येते इति तत्रान्यतरस्मिन् क्रियतेत्यत आह — "दक्षिणे निकक्ष इति । अतोऽस्माभिकक्षा हृदयं 'नेदीय उत्पत्त' सन्निहितं तदीय इत्यस्यान्तिकार्थत्वात्तयोगे 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' * मिति पक्षे प्रकरणात् पञ्चम्याविधानादत इति पञ्चमी इत्थं प्रजापते हृदयस्यादित्यात्मकत्वात्तस्य गानेनादित्य मेवाग्ने रात्मभागं करोतीत्याह,— "आदित्य मेवेति ॥ ४ ॥

प्रजापते र्हृदय गायत्रादिसामवत् च कस्याञ्चिदृचि न गीयते । अपि तु केवलं प्रजाशब्दे प्रजापतिशब्दे च गीयते अतएव आपस्तम्बेन सूचित ,— "प्रजापतेः सामान्त्च गायतीति † अतस्तस्य साम त्वयोः शब्दयोर्गान प्रशंसति — "प्रजासु चेति । न च ता प्रजासु प्रजापतौ विलक्षिधेय निर्देश. क्रियते नहि तत्र गानं सम्भवति अशक्यत्वात् नचाय शब्दनिर्देश । प्रजास्विति बहुवचनवैयर्थ्यात् । अतः कथ मस्य वचनस्योपपत्तिरिति नैतदस्ति वाच्यवाचकयोर्भेद विवक्षया वाचकशब्दे क्रियमाणं गानं

* पा० सू० २ ३ ३४ ।
† आप० श्रौ० सू० १ १२. ७ ।

वाचो क्रियत इत्युपचर्यते। तद्यत् 'प्रजासु हृदयं दधाति' अथ 'यत् प्रजापतौ गायति तदग्नौ हृदयं दधातीति'। अभिधेयफलसम्बन्धदर्शनात्तदनुरोधेनाभिधेये एव गायतीति। उपचारोक्तेरभिप्रायः पूर्वं प्रजा प्रजापतिशब्दयो र्गानेन प्रजासु अग्नौ च हृदयं निधीयत इत्युक्तम् ॥ ४१ ॥

अथाग्ने स्तदुभयात्मकत्वात् तत्रैव गाने तदुभयत्रापि हृदयं निधीयत इत्याह,— "यद्वेवेति। प्रजाशब्देन प्रजापतिशब्देन च तस्य गानमग्नौ क्रियते। अतश्च पूर्वन्तच्छब्दद्वयाभिधेयप्राधान्ये-नाग्ने रुपसर्जनत्वं मुक्तम्। अत्र तु अग्निप्राधान्येन तच्छब्दद्वया-भिधेयस्योपसर्जनत्व मुच्यत इति विभागः। "अयं वा अग्निः प्रजाश्च प्रजापतिश्चेति। स यः प्रजापतिर्व्यस्रंसतायमेव 'स योऽयमग्निश्चियत इति श्रुतेः अग्निस्तावत् प्रजाः प्रजापतेश्च सर्वप्रजा निर्मातृत्वेन तदात्मकत्वात्तद्द्वाराग्निरपि प्रजात्मक इत्यर्थः ॥ ४२ ॥

अथैतानि गायत्र्यादीनि सामानीष्टकारूपेण स्तौति— "ता हैता इति। सर्वानि भवन्ति प्राणा वै सामान्यमृत मु वै प्राणा अमृत मेवास्मिन्ने तद्रूप मुत्तमं दधातीति सामात्मता-वद मृतत्वं मुक्त मेव इष्टकानां प्रतिदिश मुपधीयमानत्वा-दुपधानवादो तेषां प्रतिदिश गानादिष्टकात्वोपचारः। एवञ्च तान्येतानि सामान्यमृतेष्टका भवन्ति। "ता हैता इति स्त्रीलिङ्गविशेषेष्टका एषे तायेष्टका उत्तमाः सर्वाभ्य इष्टकाभ्यः उपरितश्च उपरितश्च उपदधाति। तेनास्य दृश्यमानस्य

सर्वस्याप्यस्य सुत्तमं दधाति। तथादस्य सर्वस्य प्रपञ्चस्या-स्य सुतमं भवति। विहितं सामगानं समाख्यानादुद्गातुः प्राप्नोतीति। तदपवाद माह—"नाध्वर्युरि"ति। इतरस्य मा सृक्षे दोष माह—'इष्टका वा एता इ'ति। एतेषां साम्ना मिष्टकात्वादिष्टकानां चाध्वर्युणोपधेयत्वादितरस्य * मा सृक्षे तदु-पधानवैधुर्येणाध्वर्युर्निर्जितः पराभूतो भवेदित्यर्थः ॥ ४३ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां कुक्षवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यधाग्गोविश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥

---

* 'चाध्वर्युरिति इतरस्य'—इति इ, च।

उपवसथीयेऽहन्प्रातरुदित ऽआदित्ये *। व्वाचं व्विसृजते व्वाचं व्विसृज्य पञ्चगृहीत माज्यं गृह्णीते तत्र पञ्च हिरण्यशकलान् प्रास्यत्यथैतत् चयए समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां व्वोखविल्यां तदुपरिष्टाद्दर्भमुष्टिं निदधाति† ॥ १ ॥

अथाग्नि मारोहति। नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्च्चिष ऽइत्यवैष सर्व्वोऽग्निः संस्कृतः स एषोऽत्र तस्मा ऽअतं यद्विएस्यादां जिहिए-सिषेद्य मु वा ऽएष हिनस्ति हरसा वैनए शोचिषा व्वार्च्चिषा वा हिनस्ति तथो हैन मेष एतैर्न्न हि-नस्त्यन्यांस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यए शिवो भवेति यथैव यजुस्तथा बन्धुः ॥ २ ॥

आरुह्याग्निए स्वयमातृण्णां व्याघारयति। आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ३ ॥

---

* 'आदित्ये'—इति ग, घ।

† 'निदधाति'– इति ग, घ।

स्वयमातृण्णां व्याघारयति । प्राणः स्वयमातृण्णा प्राणे तदन्नं दधाति * ॥ ४ ॥

यद्देव स्वयमातृण्णां व्याघारयति । उत्तरवेदिं हैषाग्नेरथ या ममूं पूर्व्वां व्याघारयत्यध्वरस्य साथ हैषाग्नेस्ता मेतद् व्याघारयति ॥ ५ ॥

पश्यस्तत्र हिरण्यं व्याघारयति । प्रत्यक्षं वै तद्यत् पश्यति प्रत्यक्षए सोत्तरवेदिः प्राणा एवेह भवन्ति परोऽक्षं वै तद्यत् प्राणाः परोऽक्ष मिय मुत्तरवेदिः ॥ ६ ॥

स्वाहाकारेण तां व्याघारयति । प्रत्यक्षं वै तद्यत् स्वाहाकारः प्रत्यक्षए सोत्तरवेदिर्व्वैट्कारेणे-मां परोऽक्षं वै तद्यद्वेट्कारः परोऽक्ष मिय मुत्तर-वेदिराज्येनाज्येन ह्युत्तरवेदिं व्याघारयन्ति पञ्च-गृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति व्यति हारं व्यतिहारए ह्युत्तरवेदिं व्याघारयन्ति† ॥ ७ ॥

* 'दधाति'—इति ख ।

† 'व्याघारयन्ति'—इति ख ।

नृषदे व्वेडिति। प्राणो वै नृषन् मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्त मेतत् प्रीणात्यप्सुषदे व्वेडिति योऽप्स्वग्निस्त मेतत् प्रीणाति बर्हिषदे व्वेडिति य ओषधिष्वग्निस्त मेतत् प्रीणाति व्वनसदे व्वेडिति यो व्वनस्पतिष्वग्निस्त मेतत् प्रीणाति स्वर्व्विदे व्वेडित्यय मग्निः स्वर्व्विदिम मेवैतदग्निं प्रीणाति ॥ ८ ॥

यद्वेवाह। नृषदे वेडप्सुषदे वेडित्येवै वैतान्यग्नेर्नामानि तान्येतत् प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो ऽएतानेवैतदग्नौ-नस्मिन्नग्नौ नामग्राहं दधाति ॥ ९ ॥

पञ्चैता आहुतीर्जुहोति। पञ्चचितिकोऽग्निः पञ्चर्त्तवः सम्वत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति* ॥ १० ॥

अथैनꣳ समुक्षति। दध्ना मधुना घृतेन

* 'प्रीणाति'—इति ख।

जायत ऽएष एतदाचीयते स एष सर्व्वस्मा ऽअन्नाय जायते सर्व्वं ह्येतदन्नं यद्दधि मधु घृतꣳ सर्व्वेणैवैन मेतदन्नेन प्रीणाति सर्व्वतः समुक्षति सर्व्वत एवैन मेतत् सर्व्वेणान्नेन प्रीणाति ॥ ११ ॥

यद्वेवैनꣳ समुक्षति*। अत्रैष सर्व्वो ऽग्निः संस्कृतस्तस्मिन् देवा एतद्रूप मुत्तम मदधुस्तथैवास्मिन्नय मेतद्रूप मुत्तमं दधात्यन्नं वै रूप मेतदु परम मन्नं यद्दधि मधु घृतं तद्यदेव परमꣳ रूपं तदस्मिन्नेतदुत्तम दधाति सर्व्वतः समुक्षत्यपि वाह्नेन परिश्रितः सर्व्वत एवास्मिन्नेतद्रूप मुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्या अग्रैरग्रꣳ हि देवानाम् ॥ १२ ॥

यद्वेवैनꣳ समुक्षति। एतद्वै यत्रैतं प्राणा ऋषयोऽग्रे ऽग्निꣳ समस्कुर्व्वꣳस्तदस्मिन्नदोऽमुं पुरस्ताद्भाग मकुर्व्वतादः सजूरब्दीय मथास्मिन्नेतꣳ सञ्चित ऽउपरिष्टाद्भाग मकुर्व्वत तद्यत् समुक्षति

* 'समुक्षनि'—इति ख। 'समुक्षति'—इति ग।

य ऽएवास्मिंस्ते प्राणा ऋषयः सञ्चित ऽउपरिष्टाद्भाग मकुर्व्वत तानेवैतत् प्रीणाति दध्ना मधुना घृतेन तस्योक्तो वन्धुः ॥ १३ ॥

ये देवा देवानाम्। यज्ञिया यज्ञियाना मिति देवा ह्येते देवानां यज्ञिया उ यज्ञियानाᳬ सम्वत्सरीण मुप भाग मासत ऽइति संवत्सरीणᳬ ह्येत ऽएतं भाग मुपासते ऽहुतादो हविषो यज्ञे ऽअस्मिन्नित्यहुतादो हि प्राणाः स्वयं पिवन्तु मधुनो घृतस्येति स्वय मस्य पिवन्तु मधुनश्च घृतस्य चेत्येतत् * ॥ १४ ॥

ये देवा देवेषु†। अधि देवत्व मायन्निति देवा ह्येते देवेष्वधि देवत्व मायन्ये ब्रह्मणः पुर ऽएतारो ऽअस्येत्यय मग्निर्ब्रह्म तस्यैते पुर ऽएतारो येभ्यो न ऽऋते पवते धाम किञ्चनेति न हि प्राणेभ्य ऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या-

---

* 'चेत्येतत्'—इति ग।

† 'देवेषु'- इति ख, 'देवेषु'—इति ग।

ऽअधि स्नुष्विति नैव से दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिन्त्स ऽइत्येतत् * ॥ १५ ॥

द्वाभ्याᳪ समुच्चति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समुच्चति † ॥ १६ ॥

अथ प्रत्यवरोहति । प्राणदा ऽअपानदा ऽइति सर्व्वे हैते प्राणा योऽय मग्निश्चितः स यदेता मवात्मनः परिदा न वदेताव हैवास्यैष प्राणान् वृञ्जीताथ यदेता मवात्मनः परिदां वदते तथो हास्यैष प्राणान्न वृङ्क्ते प्राणदा ऽअपानदा व्यानदा वर्च्चोदा वरिवोदा इत्येतद्वा मे ऽसीत्येवैतदाहान्यांस्ते ऽअस्मत्तपन्तु हेतय पावको ऽअस्मभ्यᳪ शिवो भवेति यथैव यजुस्तथा बन्धुः ‡ ॥ १७ ॥

प्रत्येत्य प्रवर्ग्योपसद्भ्यां प्रचरति । प्रवर्ग्योप-

---

* इत्येतत्—इति ग, घ ।

† समुच्चति—इति ख ।

‡ बन्धु—इति ङ ।

सम्राजं प्रचर्याथास्मै व्रतं वार्हव्रतं वा प्रयच्छत्यथ प्रवर्ग्योपसद्भ्यामथ प्रवर्ग्यमुत्सादयन्त्याण्वा तं कामं यस्मै कामायैनं प्रवृणक्ति ॥ १८ ॥

तं वै परिष्यन्द ऽउत्सादयेत्। तप्तो वा ऽएष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृच्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत् परिष्यन्द ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यद्ध्यप्सु न प्राश्नाति तेनापो न हिनस्त्यथ यत् समन्तमापः परियन्ति शान्तिर्वा ऽआपस्तेनो ऽइमां न हिनस्ति तस्मात् परिष्यन्द ऽउत्सादयेत् ॥ ॥ १९ ॥

अग्नौ त्वेवोत्सादयेत्। इमे वै लोका एषो ऽग्निरापः परिश्रितस्तं यदग्ना ऽउत्सादयति तदेवैनं परिष्यन्द ऽउत्सादयति * ॥ २० ॥

यद्वेवाग्ना ऽउत्सादयति। इमे वै लोका एषो ऽग्निरग्निर्वायुरादित्यस्तदेते प्रवर्ग्याः स यदन्यत्रा-

* 'ऽउत्सादयति'—इति ख।

ग्नेरुत्सादयेदेतांस्तद्देवान् वहिर्देभ्यो लोकेभ्यो दध्याद्थ यदग्ना ऽउत्सादयत्येतानेवैतद्देवानेषु लोकेषु दधाति * ॥ २१ ॥

यद्वेवाग्ना ऽउत्सादयति। शिर ऽएतद्यज्ञस्य यत् प्रवर्ग्य ऽआत्माय मग्निश्चितः स यदन्यत्राग्नेरुत्सादयेद्वहिर्धास्माच्छिरो दध्याद्थ यदग्ना ऽउत्सादयत्यात्मान मेवास्यैतत् संस्कृत्य शिरः प्रतिदधाति ॥ २२ ॥

स्वयमातृण्णया सम्पृक्तं प्रथमं प्रवर्ग्य मुत्सादयति। प्राणः स्वयमातृण्णा शिरः प्रवर्ग्य आत्माय मग्निश्चितः शिरश्च तदा त्मानं च प्राणेन सन्तनोति सन्दधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम् ॥ ॥ २३ ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीय ब्राह्मणम् [ २. १. ]

* 'दधाति'—इति ख।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

औपवसथ्यदिवसात् प्राचीने दिवसे कर्त्तव्यं प्रयोग मभिधाय तथा तस्मिन् दिवसे कर्त्तव्य मभिधत्ते। "उपवसथोऽहन् इत्यादिना। 'प्रातरुदित आदित्ये वाचं विसृजति' च यजमानः वाचं विसृज्येत्। यत्र पूर्वकाल मात्रे क्त्वा प्रत्ययः न हि तत्र पूर्वोत्तरक्रियायाः समानकर्त्तृत्व मस्ति। यजमानस्य वाग्विसर्जनादध्वर्योराज्यग्रहणादिति भावः। 'अग्न्यागारे स्थाली तु पिठरा उखायां*' उरुबिल्यां महामुखां व्यत्ययेन ङी-प्रत्ययः। "तदुपरिष्टादिति। यत्र प्राच्यां स्थाल्यां वा दध्यादित्रयं समासिक्तं तदुपरिष्टादित्यर्थः ॥ १ ॥

अथाग्नि मारोहतीति "दर्भमुष्टि निधानानन्तरम् तदाज्यदध्यादित्रयं समासिक्तं तदुपरिष्टादादाय "नमस्त†" इति मन्त्रेणाग्नि मारोहेत्। अतएव कात्यायनः,— "उभय मादाय चित्यारोहणं नमस्त इति‡ इति। आरोहणे नमस्त इत्यस्य मन्त्रस्य पूर्वार्द्धस्य पाठे प्रयोजन माह— "यद्वैव सर्वोऽग्नि रिति।

---

* 'पिठरांकास (रुचि)कां (।)'—इति छ।
'पिठरांका उख्यां'—इति भ।
'पिठर्यो उख्यां'—इति म।

† वा॰ सं॰ १७ ११।

‡ का॰ श्रौ॰ सू॰ १८. ३. ५।

मात्मषा प्राचीच्येवैतत् स्वयमात्मन आत्मते इति। अतवाग्नि-मल्यन्धिनि प्राणे तदाव्यस्तपमन्त्रविहितवान् भवति। प्रका-रान्तरेणापि स्वयमातृणायां व्याघारण मुपपादयति ॥ ४ ॥

यद्देवेति। एषा स्वयमातृणा अग्ने उत्तरवेदिः (खलु। अथ या ममुग् नुडी परामर्श पूर्वा मुत्तरवेदिं व्याघारयति। सा पुनः सोमयागस्य अतोस्यां स्वयमातृणायां व्याघारणं उत्तरवेदिः) * तर्हि तद्व्याघारणे पूर्वोत्तरवेदिवत् ॥ ५ ॥

हिरण्यदर्शनादि † पूर्ववत्त्वेन भवितव्य मित्यत आह— "यद्ये स्तवेति। प्रत्यक्षं सोत्तरवेदिसंयुक्तत्वादि निर्मितत्वा-भाविनोपचारिकोत्तरावदित्वादित्यर्थः ॥ ६ ॥

स्वाहाकारस्य सर्वत्र हविःप्रदानसाधनत्वेन प्रत्यक्ष वेट्-कारस्य ‡ तु तथाभावेन परोक्षत्वं आज्येन पञ्चगृहीतेन व्यतिहार मुत्तरं वेदेर्व्याघारणात् तथैवास्या अपि उत्तर-वेदित्वेन व्याघारण मुपपन्न मित्याह। "आज्येनेत्यादिना। व्यतिहार मित्यनेन पूर्वं दक्षिणांसे व्याघारणं तत उत्तरश्रोणौ पश्चाद्दक्षिणश्रोणौ तत उत्तरांसे तत मध्ये इत्यय क्रमो विवक्षितः ॥ ७ ॥

अथ क्रमेण मन्त्रान् प्रदर्श्य व्याचष्टे। "नृषदे वेडिति नृषु सीदतीति। नृवत् इति प्राणव्यतिरिक्त मपि वर्त्तु

* 'खल्वनीचिहान्तः प्रदर्शितः पाठो ग-पुस्तकमात्रे नास्ति।
† का० श्रौ० सू० १८. ३. ७।
‡ वा० सं० १७. १२।

प्रश्नम इति। विवक्षितोऽर्थो दर्शितः— "प्राणो वै नृषदिति।
नृषदित्यत्र नृ-शब्दस्य प्रसिद्ध एवार्थो विवक्षितो नेतर इत्युक्तं
मनुष्या नर इति एतत् मन्त्रसाध्यव्याघारणस्य फलमुक्तम्।
"नृभ्योऽय मिति। वेडिति सम्प्रदानार्थीयो निपातः। नृषदे
मनुष्येषु वर्त्तमानाय प्राणरूपायाग्नये वेट् इदं माज्य-
रूपं हविर्दत्त मित्यर्थः। "अय मग्निः स्वर्विदिति। 'अय'
सवित्रोऽग्निः 'स्वर्वित्' स्वर्गं लम्भयतीति स्वर्वित् स्पष्टार्थं
मन्यत्॥ ८॥

प्रकारान्तरेण मन्त्राणा मभिधानं प्रशंसति— "यद्वेवाह
अप्सुषदे वेडिति॥ इत्यवेति शब्दः प्रकारवाचीनेन बर्हिषदे
वेडित्यादीन्यपि संगृहीतानि भवन्ति। एतानि नृषदित्या-
दीनि अस्यैव सञ्चितस्याग्नेर्नामानि अस्य सर्वात्मकत्वेन मनुष्यादि-
स्थितात्मकत्वात्। अत एतेन नाम्नैवनामानि प्रीणित-
वान् भवति। न केवलं तेषां प्रीणनं अपि तदेव ताह-
अभ्यसिद्धयो याह,— "तानीति"। 'यस्यै खलु देवतायै हविर्गृह्यते
सा देवता न' भवति। अतोऽत्र नृषदादि नामानि चतुर्थ्य
न्तान्युच्चार्यहोमविधानात् सदर्थं हविर्ग्रहण मिति हविषा तानि
आत्मानि देवता कृतवान् भवति। किञ्च नृषदादि शब्दाभि-
धेयाग्निमयाह मस्मिन् सञ्चितेऽसौ निदधाति॥ ८॥

कार्त्स्न्येन प्रीति र्भवतीत्याह,—

आकुलीका

"पश्चैता इति। पश्चाद्गृहीत माज्यं दध्यादिकस्येतुमथ मध्यम्ने-रुपयानीतं तत्राज्यस्य विनियोगोऽभिहितः ॥ १० ॥

अथावशिष्टस्य विनियोग माह— "अथैन मिति। तदु-पयोग माह, "आयत एव इति ॥ ११ ॥

दध्यादीनां बहुत्वात् सर्वाभत्वं विहितं तत् समुच्चयं परिश्रित्सरो बहिरपि कर्त्तव्यं मित्याह,— "सर्वत इति *। उपरिष्टाद्दर्भमुष्टिं निदधातीत्युक्तान् दर्भान् समुच्चये विनियुज्य प्रशंसति — "दर्भै रिति। 'अन्नं हि देवाना मिति' हि शब्दः शाखान्तरप्रसिद्धिं द्योतयति। अतएव तैत्तिरीयके श्रूयते,— "यत् पवित्रं तद्देवाना मिति" †। अथ ते दध्यादिभिः समुच्चये शाऽऽग्नीन् संस्कृतोऽग्नौ उत्तमरूपनिधानं भवतीति प्रशंसति। 'यद्वेवेति' 'अयं वै रूप' मित्यादिना परमरूपत्व मुपपाद्यते। अन्नत्वावद्रू-पकारणत्वाद् रूपं परमत्वं तु दध्यादीनां रसातिशयवत्वादिति दध्यादीनि परमं रूप मित्यर्थः ॥ १२ ॥

अथ पुनस्तान्येव दध्यादीन्यग्नेरुपरिष्टाद्भागरूपेण प्रशं-सति— "यद्वेवैन मिति। अग्ने पूर्वं 'यत' यस्मिन्नवसरे ऋषिशब्दाभिधेयाः 'प्राणा' विस्रस्तं प्रजापतिं 'समस्कुर्वन्' तदद: काले 'अदः' शब्दस्तस्य कालस्य विप्रकर्ष मभिधत्ते। 'अमुं भाग' मकुर्वत 'अमु' मित्यपि विप्रकृष्टो भाग उच्यते।

---

* "सर्वतः समुद्रत्यपि बाह्येन परिश्रित इति"—इति का० श्रौ० सू० १८. ३. ८।

† तै० ब्रा० १. ६. ८ ६।

'अमुं भाग' मिति यदुक्तं-तदेवाह अतः (।) 'सजूरब्दोय' मिति सजूरब्दो ऽयवोभिरित्येतेन मन्त्रेण प्रतिपादितं होमरूप मन्न' यथाग्निन् सञ्चितेऽग्नौ एवं तं दध्यादिलक्षण ·मुपरिष्टाद्भाग मकुर्वतानेव प्रीणाति। सञ्चितस्याग्नेः प्राणविशिष्टत्वेन प्राण-कृतोऽग्नेर्भागः प्राणाना मपि भवतीति तस्याग्नेरनेनोपरिष्टाद्भागेन 'तानेव' प्राणान् प्रीणितवान् भवतीत्यर्थः। दध्यादि-विषयं ब्राह्मणम् प्रागुक्त मित्याह,— दध्नेति। तत्र सप्तम-काण्डे कूर्मोपधानकथनावसरेऽभिहितम् * ॥ १३ ॥

अथ समुच्चये प्रथम मन्त्र दर्शयन् व्याचष्टे— "ये देवा देवाना मिति †" देवा 'यज्ञियानां' यज्ञार्हाणा मपि 'यज्ञिय' तत् पूर्वं कथ मेव सर्वेषां यज्ञार्हत्वादित्यर्थः द्वितीय तृतीय मादौ प्रसिद्धार्था वित्याह 'संवत्सरीणा' मिति। एतस्य समुच्चयस्य संवत्सराद् क्रियमाणत्वादेतत् 'संवत्सरीणो भाग' यतः प्राणादध्यादोनाहुता-न्येयादग्नि अतोऽहुतादो 'हविष' इत्युक्तम्। चतुर्थपादे मधुनो घृतस्येत्यनेन प्रकृत मेव मध्वादि उच्यत इत्याह— ("संवत्स-रीणा मिति। एतस्य समुच्चयस्य संवत्सराद् क्रियमाणत्वा-देतत् 'संवत्सरीणो भाग' यतः) ‡ स्वगमस्येति ॥ १४ ॥

अथ द्वितीय मन्त्रं व्याचष्टे—"ये देवा देवेष्विति §। 'देवाश्चेते'

---

* पुरस्तात ७ का० ४ प्र० १ ब्रा० १ कण्डौ।

† वा० सं० १७ १३।

‡ बन्धनीचिह्नान्तः प्रदर्शितः पाठो क-पुस्तकमात्रे अधिकः।

§ वा० सं० १७ १४।

इति। एते देवाः प्राणादिदेवेषु 'अधि देवत्वं' अधिका देवास्तेषां भाव स्तत्व 'मायन्' प्राप्नुवन् तान्प्रति स्तेषा मुपजीव्यत्वात्। अत उक्तं 'ये देवा देवेष्विति' द्वितीयपादे सर्वात्मकत्वम्। ननु इहत्वाद्ब्रह्मशब्देनाग्नि रुच्यत इत्याह ,— "अयमग्निरिति। तृतीयपादः प्रसिद्धार्थ इत्याह—"न त्वि प्राणेभ्य इति। तुरीयपादे ऽभिप्रेतं विशेषमाशङ्कनेवति इति। 'ते' प्राणादित्यपि 'न' सन्ति पृथिव्या मपि न सन्ति 'किं' तु यदेव प्राणभृदस्तु तस्मिन् सन्तीत्ये-तदुक्तं भवति। देवाना मपि देवा यज्ञियाना मपि यज्ञिया ये प्राणाः संवत्सर सम्बन्धिनं भाग मुपासते। अस्मिन् पक्षे हविषा हुतांशद्यात्पर स्ते स्वयमस्य मधुनो घृतस्य पिबन्तु मधुनो घृतस्येति व्यत्ययेन कर्मणो षष्ठी , मधु घृतं उपलक्षण मेतत्। दध्यपि पिबंत्विति प्रथमस्यार्थः। ये देवाः देवेष्वपि अधिक-देवत्वं प्राप्नुवन् किञ्च ये यस्या अग्नेः पुरो गन्तारो भवन्ति येभ्यो विना किञ्चिदपि शरीरं न प्रवर्तते प्राणा दिवः सानुषु पृथिव्या अपि सानुषु न सन्ति। किन्तु यदेव प्राण-भृत् तत्रैव सन्तीति द्वितीयस्यार्थः। 'सानु' शब्दस्य (यदा-दिषु मास्तत् स्नूना मुपसङ्ख्या मितिस्तु आदेशम्। समुच्चय-मन्त्रयो हिस्वसङ्ख्यां अग्नेः समुच्चयसाकल्ये हेतुत्वेन प्रशंसति.॥१५॥

"द्वाभ्या मिति। यजमानस्याग्निचयनेनाग्नित्वप्राप्ते यजमानो-ऽग्निः समुच्चयानन्तरम् प्रत्यवरोहेदित्याह यथेति) * ॥ १६ ॥

---

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादर्शम्.।

अवरोहणम् उत्तरपक्षस्यानग्रमप्यतिरेकयो गुणादोषावाद 'सर्व हैव' इत्यादिना 'योऽग्य अग्नि' वचनेन संस्कृतः एत सर्वे प्राणाः प्राजापत्यात्मकत्वात् सर्वेषां प्राणा इत्यर्थः । अत सोऽध्वर्यु दवावसरे यदि 'आत्मन' वर्ग "प्राणदा * इत्येतान् मन्त्रवर्गा प्राणरक्षणं न वदेत तर्हि एषोऽग्निरस्याध्वर्यो 'प्राणान् वृञ्जीत' वर्जयेदपगमयेदित्यर्थः । प्राणादित्यादिमन्त्ररूप परिदाभिधाने तु तया न कुर्यात् ।

इत्थ मन्त्ररूपस्योपयोग मभिधायाय मन्त्र व्याचष्टे— "प्राणदा इति †" । "एतद्वा मेऽसीत्येतदिति । 'मे' मदर्थ वर्चो प्राणादीनां मासीत्येतदेवोक्तं भवति न पुनरन्यार्थ मित्यर्थः । हे अग्ने त्वम् मे प्राणापान'व्यानानां वर्चसो धनस्य च दातासि । अतो ब्रवीमि ते हैतयो ऽस्मादन्यां 'प्रापतु' 'अस्मभ्यं' तु 'पावकः शिवश्च भव' ॥ १७ ॥

अग्नेरवरुह्य प्रयात्, कर्मस्थं प्रयोग माह— "मत्येत्येति । अयात्मा इति 'अस्मै' यजमानाय 'मतं' पय आरस 'वा अर्हं-मतं प्रयच्छति' 'अथ' तदा मैत्रावरुणिकाभ्यां 'प्रवर्ग्योपसद्भ्यां प्रचर्य' अथ प्रवर्ग्यं मुत्सादयति 'यस्मैकामायेम मद्दूपत्ति' तस्य कामस्याप्ते' स्यात् इत्यर्थः ॥ १८ ॥

'प्रवर्ग्य मुत्सादयति' सामान्येन विधानायत्र क्वचित् प्रसक्ता-माह,— "न वा इति । परितः स्कन्दो कलसत्वं यत्र

* "प्राणदा इत्यवरोहति"—इति का० श्री० सू० १८ ३. ८ ।
† वा० सं०-१७. १५ ।-

परिप्यन्दो द्वीपः * । ननु पृथिव्या अप्सु वा कस्मान्नोत्सादनम् इत्यत आह,— "तस्मो वा इति। एष प्रवर्ग्य, प्रातत्वाच्छोक-विशिष्टो भवति। अतस्तं यदि पृथिव्या मुत्सादयेत् तदा तच्छोकः पृथिवीं प्राप्नोति। अथ यद्यप्सु उत्सादयेत्, तदाप्सु शोकः प्राप्नोति। तस्मात् तत्र नोत्सादनीयः किन्तु परिप्यन्दे तथा च पृथिवीं अपश्च न हिनस्ति ननु; परिप्यन्द उत्सादनेऽपि तत्र तदुभय सम्भवात्, कथं तासां हिंसाभावः इति। तत्राह,— "यदद्भ्यामिति। अपां मध्ये-तुक्तादयो हिनस्ति यद्द्वीपे पृथिवीं मेवोत्सादयति। तथा परिमितः शान्तिहेतु भूताभिरद्भिर्वेष्टयितत्वात् पृथिव्या अपि हिंसाभावो इत्यर्थः ॥ १८ ॥

प्रवर्ग्योद्वासनस्य स्थानान्तरं विधत्ते—, "अग्नौत्वेवेति ॥-पूर्वोक्त परिप्यन्दे अग्नौ वा प्रवर्ग्य उत्साद्यते, इति विकल्प-विधान मेतत्। अतएव, कात्यायनः— "अग्नौ परिप्यन्दे वा इति †। तत्रस्य प्रवर्ग्यस्य परिप्यन्द उद्वासने, कस्यचिदपि बाधाभावाद्व्याप्यत्वेः परिप्यन्दस्य आह— ,"इमे वै लोका इति। पृथिव्यादिलोकात्मकस्याग्नेः समुद्रपदेष्टनात् परिश्रिता-मेवात्मकत्वम् ॥ २० ॥

---

* "अग्नौ इष्टकाचितः स्थलरूपे • परिप्यन्दे यस्य परितः आपः स्यन्दन्ते परिगच्छन्ति परिप्यन्दो द्वीपः जलमध्यस्थो जलानाच्छादित उच्चप्रदेशः"—इति का० श्रौ० सू० १८. ३. ११।

† "उपसदन्ते प्रवर्ग्योत्सादनं यथोक्त मग्नौ परिप्यन्दे वा"—इति का० श्रौ० सू० १८. ३. १०।

अथाग्न्यावेक्षोदासनं प्रशंसति,— "यद्देवेति। अग्न्यादयो देवादीप्यमानत्वेन 'प्रवर्ग्यो' भवत। लोकत्रयात्मकादग्नेरन्यत्र प्रवर्ग्योत्सादने अग्न्यादीनेतेभ्यो लोकेभ्यो बहिर्हा कुर्यात्। अग्नौ तदुद्वासने तु एष्वेव लोकेषु अग्न्यादीनिहितवान् भवति। अग्नावुत्सादयतीति लोपः "माङ्क्रयञ्चेति * वकारस्य लोप" ॥ २१ ॥

। अथ पुनस्तत्रैवोद्वासनं यज्ञस्य शिरः शरीरसन्धानरूपेण प्रशंसति;— "यद्देवाग्ना उत्सादयतीति ॥ २२ ॥

यदास्वग्न्यायुत्सादनं तदोद्वासने विशेष माह— "स्वयमातृण्ण-येति। 'प्रथमं प्रवर्ग्यं' स्वयमातृण्णाया 'संसृष्ट' मुद्वासयेत्। एवञ्च स्वयमातृण्णायाः † प्राणरूपत्वात् प्रवर्ग्यात्मकस्य यज्ञस्य शिरसः सचितान्न्यात्मकस्य यज्ञशरीरस्य प्राणेन सन्धानं करोति। "अन्द-धातीति। अस्यैव विवरण 'उत्साद्य प्रवर्ग्य मिति'। तस्य प्रव-र्ग्यस्य यथा येन प्रकारेण प्रवर्ग्यकाण्डोक्तप्रकारेण उत्सादनं सूक्तं तेन प्रकारेण प्रवर्ग्यं सुत्सादयेत् प्रत्येत्यग्निं प्रहरिष्यन्नित्या-द्युत्तकालक्रियापञ्चगोत्सायेतिभ्यसः प्रयोगः ॥ २३ ॥ १ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

नवमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

---

* पा० सू० ८. ३. १९।

† का० श्रौ० सू० १८ ३. १३।

॥ अथ द्वितीयं ब्राह्मणम् ॥

प्रत्येत्याग्निं प्रहरिष्यन्* । आहुतीश्च जुहोति समिधश्चादधात्येतद्वा ऽएनं देवा एष्यन्तं पुरस्तादन्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैन मय मेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णाति तस्योक्तो बन्धुः† ॥ १ ॥

अथ षोडशगृहीतं गृह्णाति । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितेनैवैन मेतदन्नेन प्रीणाति यदु वा ऽआत्मसम्मित मन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयो न तदवति समान्याꣳ स्रुचि गृह्णाति समानो हि स य मेतत् प्रीणाति वैश्वकर्मणाभ्यां जुहोति विश्वकर्मायमग्निस्त मेवैतत् प्रीणाति तिस्र ऽआहुती-

---

* 'प्रहरिष्यन्'—इति ग, घ ।

† 'बन्धुः'—इति ङ ।

जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतै-वैन मेतदन्नेन प्रीणाति * ॥ २ ॥

अथ समिध ऽआदधाति । यथा तर्पयित्वा परिवेविष्यात्तादृक्तदौदुम्बर्यो भवन्त्यूर्ग्वै रस उदुम्बर ऽऊर्ज्जैवैन मेतद्रसेन प्रीणात्यार्द्रा भवन्त्येतद्वै वनस्पतीना मनार्त्तं जीवं यदार्द्रं तदादेव वनस्पतीना मनार्त्तं जीवं तेनैन मेतत् प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैन मेतद् भागेन स्वेन रसेन प्रीणाति सर्व्वाꣳ रात्रिं व्यसन्ति तद्व हि ता रसेन सम्पद्यन्ते तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेत-दन्नेन प्रीणाति ॥ ३ ॥

यद्वेवैता आहुतीर्जुहोति । एतद्वा ऽएनं देवा ऽएष्यन्त पुरस्तादन्नेन समस्कुर्व्वन्नेताभिरा-हुतिभिस्तथैवैन मय मेतदेष्यन्त पुरस्तादन्नेन संस्करो-त्येताभिराहुतिभिः ॥ ४ ॥

* 'प्रीणाति'—इति ख ।